॥ श्रीश्रीचैतन्योपनिषत् ॥

अथ पिप्पलादः समित्पाणिर्भगवन्तं ब्रह्माणमुपसन्नो,
भगवन् मे शुभं किमत्र चक्षस्वेति ॥ १॥

स होवाच ।
भूय एव तपसा ब्रह्मचार्येण शश्वत् रमस्व मनो वशेति ॥ २॥

स तथा भूत्वा भूय एनमुपसद्याह -
भगवन् कलौ पापाच्छन्नाः प्रजाः कथं मुच्येरन्निति ॥ ३॥

को वा देवता को वा मन्त्रो ब्रूहीति ॥ ४॥

स होवाच । रहस्यं ते वदिष्यामि -
जाह्नवीतीरे नवद्वीपे गोलोकाख्ये धाम्नि गोविन्दो द्विभुजो
गौरः सर्वात्मा महापुरुषो महात्मा महायोगी
त्रिगुणातीतः सत्त्वरूपो भक्तिं लोके काश्यतीत ।
तदेते श्लोका भवन्ति ॥ ५॥

एको देवः सर्वरूपी महात्मा गौरो रक्त-श्यामल-श्वेतरूपः ।
चैतन्यात्मा स वै चैतन्यशक्तिर्भक्ताकारो
भक्तिदो भक्तिवेद्यः ॥ ६॥

नमो वेदान्तवेद्याय कृष्णाय परमात्मने ।
सर्वचैतन्यरूपाय चैतन्याय नमो नमः ॥ ७॥

वेदान्तवेद्यं पुरुषं पुराणं चैतन्यात्मानं विश्वयोनिं महान्तम् ।
तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय ॥ ८॥

स्वनाममूलमन्त्रेण सर्वं ह्लादयति विभुः ॥ ९॥

द्वे शक्ती परमे तस्य ह्लादिनी संविदेव च । इति ॥ १०॥

स एव मूलमन्त्रं जपति हरिरिति कृष्ण इति राम इति ॥ ११॥

हरति हृदयग्रन्धिं वासनारूपमिति हरिः ।
कृषिः स्मरणे तच्च णन्तदुभयमेलनमिति कृष्णः ।
रमयति सर्वमिति राम आनन्दरूपः ।

अत्र श्लोको भवति ॥ १२॥

मन्त्रो गुह्यः परमो भक्तिवेद्य ॥ १३॥

नामान्यष्टावष्टे च शोभनानि, तानि नित्यं ये जपन्ति
धीरास्ते वै मायामतितरन्ति नान्यः ।
परमं मन्त्रं परमरहस्यं नित्यमावर्तयति ॥ १४॥

चैतन्य एव सङ्कर्षणो वासुदेवः परमेष्ठी रुद्रः शक्रो
बृहस्पतिः सर्वे देवाः सर्वाणि भूतानि स्थावराणि चराणि च
यत्किञ्चित् सदसत् कारणं सर्वम् । तदत्र श्लोकः ॥ १५॥

यत्किञ्चिदसद्भुङ्क्ते क्षरं तत्कार्यमुच्यते ॥ १६॥

सत्कारणं परं जीवन्तदक्षरमितीरितम् ॥ १७॥

क्षराक्षराभ्यां परमः स एव पुरुषोत्तमः ।
चैतन्याख्यं परं तत्त्वं सर्वकारणकारणम् ॥ १८॥

य एनं रसयति भजति ध्यायति स पाप्मानं तरति,
स पूतो भवति, स तत्त्वं जानाति, स तरति शोकम् ।
गतिस्तस्यास्ते नान्यस्येति ॥ १९॥

न चैतन्यात् कृष्णाज्जगति परतत्त्वात्परमिह ॥

इति ।